# वंशब्राह्मण

नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नम वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय च १ उपजायत शर्वदत्ता- द्गार्ग्याच्छार्वदत्तो गार्ग्यः २ शर्वदत्तो गार्ग्यो रुद्रभूतेर्द्राह्यायणात् ३ रुद्रभूति- र्द्राह्यायणस्त्रातादैषुमात् ४ त्रात एषुमतो निगडात् पार्णवल्केः ५ निगडः पार्णवल्किः गिरिशर्मणः काण्ठेविद्धेः ६ गिरिशर्मा काण्ठेविद्धिर्ब्रह्म- वृद्धेश्छन्दोगमाहकेः ७ ब्रह्मवृद्धिश्छन्दोगमाहकिर्मित्रवर्चसः स्थैरकायनात् ८ मित्रवर्चाः स्थैरकायनः सुप्रतीतादौलुन्द्यात् ९ सुप्रतीत औलुन्द्यो बृहस्पति- गुप्ताच्छायस्थेः १० बृहस्पतिगुप्तः शायस्थिर्भवत्राताच्छायस्थेः ११ भवत्रातः शायस्थिः कुस्तुकाच्छार्कराक्ष्यात् १२ कुस्तुकः शार्कराक्ष्यः श्रवणदत्ता- त्कौहलात् १३ श्रवणदत्तः कौहलः सुशारदाच्छालङ्कायनात् १४ सुशारदः शालङ्कायन ऊर्जयत औपमन्यवात् १५ ऊर्जयन्नौपमन्यवो भानुमत औप- मन्यवात् १६ भानुमानौपमन्यव आनन्दजाच्चान्धनायनात् १७ आनन्दजश्चा- न्धनायनः शाम्बाच्छार्कराक्ष्यात्काम्बोजाच्चोपमन्यवात् १८ शाम्बः शार्क- राक्ष्यः काम्बोजश्चौपमन्यवो मद्रकाराच्छौङ्गायनेः १९ मद्रकारः शौङ्गायनिः स्वातेरौष्ट्राक्षेः २० स्वातिरौष्ट्राक्षिः सुश्रवसो वार्षगण्यात् २१ सुश्रवा वार्ष- गण्यः प्रातरह्नात्कौहलात् २२ प्रातरह्नः कौहलः केतोर्वाद्यात् २३ केतुर्वाद्यो मित्रविन्दात्कौहलात् २४ मित्रविन्दः कौहलः सुनीथात्कापटवात् २५ सु- नीथः कापटवः सुतेमनसः शाण्डिल्यायनात् २६ सुतेमनाः शाण्डिल्या- यनोऽँशोर्धानंजय्यात् २७ १

अंशुर्धाञ्जय्योऽमवास्याच्छाण्डिल्यायनाद्राधाच्च गौतमात् १ राधो गौतमो गातुर्गौतमात् पितुः २ गाता गौतमः संवर्गजितो लामकायनात् ३ संवर्ग- जिल्लामकायनः शाकदासाद्भाडितायनात् ४ शाकदासो भाडितायनो वि- चक्षणात्ताण्ड्यात् ५ विचक्षणस्ताण्ड्यो गर्दभीमुखाच्छाण्डिल्यायनात् ६ गर्दभीसुखः शाण्डिल्यायनः उदरशाण्डिल्यात्पितुः ७ उदरशाण्डिल्यो- ऽतिधन्वनश्च शौनकान्मशकाच्च गार्ग्यात् ८ मशको गार्ग्यः स्थिरकात् गार्ग्यात्पितुः ९ स्थिरको गार्ग्यो वासिष्ठाच्चैकितानेयात् १० वासिष्ठ-

श्चैकितानेयो वासिष्ठादारेहणयाद्राजन्यात् ११ वासिष्ठ आरेहणयो राजन्यः सुमन्त्राद्बाभ्रवाद्गौतमात् १२ सुमन्त्रो बाभ्रवो गौतमः शूषाद्वाह्नेयाद्भारद्वाजात् १३ शुषो वाह्नेभ्यो भारद्वाजोऽरालाद्दार्तेयाच्छौनकात् १४ अरालो दर्तेयः शौनको दृतैरैन्द्रोताच्छौनकात्पितुः १५ दृतिरैन्द्रोतः शौनक इन्द्रोताच्छौनका-त्पितुरेव १६ इन्द्रोतः शौनको वृषशुष्माद्वातावतात् १७ वृषशुष्मो वातावतो निकोथकाद्भायजात्यात् १८ निकोथको भायजात्यः प्रतिथेर्देवतरथात् १९ प्रतिथिर्देवतरथो देवतरसः शावसायनात्पितुः २० देवतराः शावसायनः श-वसः पितुरेव २१ शवा अग्निभुवः काश्यपात् २२ अग्निभूः काश्यप इन्द्रभुवः काश्यपात् २३ इन्द्रभूः काश्यपो मित्रभुवः काश्यपात् २४ मित्रभूः काश्यपो विभुण्डकात्काश्यपात्पितुः २५ विभण्डकः काश्यप ऋष्यशृङ्गात्काश्यपा-त्पितुः २६ ऋष्यशृङ्गः काश्यपः काश्यपात्पितुरेव २७ कश्यपोऽग्नेः २८ अग्निरिन्द्रात् २९ इन्द्रो वायोः ३० वायुर्मृत्योः ३१ मृत्युः प्रजापतेः ३२ प्रजापतिर्ब्रह्मणः ३३ ब्रह्मा स्वयम्भूः ३४ तस्मै नमस्तस्मै नमः ३५ २

आचार्येभ्यो नमस्कृत्वाथ वंशस्य कीर्तयेत्
स्वधा पूर्वेषां भवति नेतायुर्दीर्घमश्नुते

इत्युक्त्वानुक्रामेद्वंशमा ब्रह्मणः १ नयन्नर्यमभूतेः कालबवात् २ अर्यमभू-तिः कालबवः भद्रशर्मणः कौशिकात् ३ भद्रशर्मा कौशिकः पुष्पयशस औदव्रजेः ४ पुष्पयशा औदव्रजिः संकराद्गौतमात् ५ संकरो गौतमोऽर्य-मराधाच्च गोभिलात्पूष्मित्राच्च गोभिलात् ६ पूषामित्रो गोभिलोऽश्वमित्रा-द्गोभिलात् ७ अश्वमित्रो गोभिलो वरुणमित्राद्गोभिलात् ८ वरुणमित्रो गोभिलो मूलमित्राद्गोभिलात् ९ मूलमित्रो गोभिलो वत्समित्राद्गोभिलात् १० वत्स-मित्रो गोभिलो गौल्गुलवीपुत्राद्गोभिलात् ११ गौल्गुलवीपुत्रो गोभिलो बृह-द्वसोः पितुः १२ बृहद्वसुर्गोभिलो गोभिलादेव १३ गोभिलो राधाच्च गौतमात् १४ समानं परं समानं परम् १५ ३

Credits

Source: *Vaṃśa-Brāhmaṇa*
Typescript: Edited by Anshuman Pandey
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection